॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला
२०८



महाकवि-श्रीभासप्रणीतं

# प्रतिमा-नाटकम्

'प्रकाश' नामक संस्कृत-हिन्दी टीकाद्वयोपेतम्

प्रकाशकः—

चौखम्बा-संस्कृत-पुस्तकालय, बनारस-१

॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

२०८

महाकवि-श्रीभासप्रणीतं

# प्रतिमा-नाटकम्

'प्रकाश' नामक संस्कृतहिन्दीटीकाद्वयोपेतम्

टीकाकारः

मुजफ्फरपुरराजकीयधर्मसमाजसंस्कृतमहाविद्यालयवेदान्ताध्यापक-

व्याकरण-साहित्य-वेदान्ताचार्य-

पण्डित श्री रामचन्द्र मिश्रः

प्रकाशकः

जयकृष्णदास-हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज आफिस

विद्याविलास प्रेस, बनारस

सं० २००७ ] मूल्य २॥) [ सन् १९५०

# प्रास्ताविकम्

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनीकौतुकाय ?॥

## 'काव्येषु नाटकं रम्यम्'

सृष्टेरस्याः प्रथमायां प्रवृत्तौ निर्णीयमानायां कालविषये काममुत्पद्यन्तां मतभेदाः, परन्तु स कालो लक्षैरेवाब्दानां परिच्छेत्तव्य इत्यत्र नास्ति विवादः। सृष्टिप्रथमप्रहरे मनुष्या आसन्न वेत्यत्रापि विद्यते मतभेदसम्भावना, विकासक्रममातिष्ठमाना अपि सत्कार्यवादाभ्युपगन्तार इव केनापि रूपेण मानुष्यकबीजं समये तत्रापि सदवगच्छेयुः। ततः कालात् क्रमशो विकाशोन्मुखी मानवसृष्टिः सभ्यतांशेऽपि प्रतिपदमग्रेसरीभवितुमचेष्टत, क्रमेण वाक् स्फुटतामानीयत, वाक्सन्दर्भ उपाक्रम्यत, व्यवहारा निरधार्यन्त। सैव सभ्यता यदा स्वानुभवान् परेभ्य आस्वादनाय प्रदातुमन्तः कामपि प्रेरणामाचकलत् तदैव काव्यमात्मानमलब्धेति विदुषां विचारः। सर्वप्रथमं कस्यां भाषायां काव्यनिर्माणमारभ्यतेत्यपि नाधुना निर्णेतुं शक्यं, बह्वो भाषा उत्पद्य स्वपोषकजात्या सहैवास्तमुपगताः स्युरित्यस्यापि तर्कस्य सारवत्तयोपष्टम्भात्। किन्त्वधुनोपलभ्यमानासु भाषासु वैदिकभाषया ऋग्वेदस्य सर्वप्राचीनग्रन्थतयाऽऽस्थितस्य स्वाङ्के धारणात् प्राचीनत्वमभ्युपयन्तोऽपि नैवापराध्यन्ति। तदेवमस्यां संस्कृतभाषायां सर्वप्रथमं काव्यमात्मानमासादयदिति वयं भारतीया अभिमन्यामहे। काव्यमथ केन रूपेण स्वं प्राकटयदिति चिन्त्यमाने गद्यात्मनैव तदाविरभवदिति मन्तव्यमेव, यद्यपि बहवः काव्यपदस्य पद्यबद्धवाक्सन्दर्भपर्यायतामङ्गीकुर्वते, परन्नैतदाद्रियन्ते विवेचकाः। एवं गद्यकृतसाहित्यिकचमत्कारस्य चिरपरिचितत्वे सञ्जाते झिल्लीझंकृतेषु पिकरुतेषु निर्झरनिर्गतकलकलनिनादेषु गतिकृतमाधुर्यातिशयमहिम्ना कामपि मादकतामनुभूय तदाधारेण प्रवृत्ताया उद्भाविताया वा सङ्गीतकृतानन्दधाराया गद्यगतभावाभिव्यक्तिप्रवाहस्य चान्योन्यमुपसङ्क्रमे कोऽपि नवः सुखविशेषः समुदियादिति विचारे प्ररूढवति पद्यात्मकः काव्यस्य परिणामः सम्भाव्यते स्यादुद्भूतः। सोऽयं काव्यप्रवाहः सति हृदये कन्न मदयति ? कस्य

चक्षुषी नार्द्रयति ? कस्य वा चेतसः स्फीतस्फारतां नादधाति ? तेष्वपि काव्येषु नाटकानां शब्दसमर्थ्यार्थभरस्याङ्गिकवाचिकाद्यभिनयद्वारा प्रत्यक्षीकरणात् पोषणाच्च पात्रपाठ्यतदीयरूपतद्वाक्चातुर्यादिना करामलकवद्भासनाद्वाऽस्ति प्राधान्यमिति मन्यामहे ।

## नाटक-साहित्यस्य प्राचीनता

भारतीयं नाटकीयं साहित्यं मूलत एव विचारधारायां विकासक्रमे च स्वतन्त्रमित्याधुनिका अपि विवेचकाः स्वीकुर्वन्ति । एतदीयमूलान्वेषणे क्रियमाणे ऋग्वेदपर्यन्तं[1] गन्तव्यं भवति, यत्र नाटकीयवार्तालापप्रकारः समाविष्टो विद्यते । रामायणे[2] महाभारते[3] च नाटकस्य प्रसङ्ग आयातः । कृष्णलीलाविषयकनृत्यगीताद्याधारेणास्य प्रकटः प्रसारः स्वीक्रियत एव ।

६ष्ठे बी० सी० शताब्दीसमये समुद्भूतेन वैयाकरणप्रधानेन पाणिनिना न केवलं नाटकं स्मृतमेवापितु निर्मितमपि[4] ।

---

१—ऋग्वेदस्य दशमे मण्डले प्रथमाध्याये दशमे च चतुर्दशर्चे सूक्ते यमयमीसंवादो नाटकीयकथोपकथनपद्धत्योपनिबद्धस्तमेवाधारीकृत्यायमूहः ।

२—'रसैश्शृङ्गारकरुणहास्यरौद्रभयानकैः ।
वीरादिभी रसैर्युक्तं काव्यमेतदगायताम्' ॥ १–४–९.
'नाराजके जनपदे प्रकृष्टनटनर्त्तकाः' । २–६७–१५.
'श्रैष्ठ्यं शास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च' । २–१–१७.
'वादयन्ति तथा शान्ति लासयन्त्यपि चापरे ।
नाटकान्यपरे प्राहुर्हास्यानि विविधानि च' ॥ २–६९–४.
'शैलूषाश्च तथा स्त्रीभिर्यान्ति' २–८३–१५.

३—'इत्यब्रवीत् सूत्रधारः सूतः पौराणिकस्तथा' ।
'ननृतुर्नर्त्तकाश्चैव जगुर्गेयानि गायकाः' ।
'पश्यन्तो नटनर्त्तकान्' ।
'नाटका विविधाः काव्याः कथाख्यायिककारकाः' ।
'आनर्त्ताश्च तथा सर्वे नटनर्तकगायकाः' ।

४—तथा च स्माराम:—'स्वस्ति पाणिनये तस्मै येन रुद्रप्रसादतः ।
आदौ व्याकरणं प्रोक्तं ततो जाम्बवतीजयम्' ॥
इदमेव जाम्बवतीजयं, यत्र—
'गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत्प्रावृषि कालमेघाः ।
अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुङ्करोति' ॥
'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।

भरतेन स्वकीयं नाटथशास्त्रं खैष्टाव्दस्य तृतीये शतके निरमीयत, तस्मिंश्च समये नाटकानां वहुलः प्रचार आसीदित्यगत्यापि स्वीकरणीयम् ।

विहारप्रान्ते छोटानागपुरनामके विभागे एका रङ्गशालाऽनुसन्धातृभिरासादिता, या वी० सी० द्वितीयशताव्दीसमये निर्मितोच्यते । एतेन संस्कृतभाषायां नाटकानां निर्माणमपि वी० सी० तृतीयशतके प्राप्तप्रकामप्रचारमासीदिति वक्तुं शक्यते । बुद्ध-चरितं नाम काव्यं प्रवद्धवतोऽ'श्वघोषस्य' नाटकमप्युपलव्धमस्ति यो जन्मना खैष्टाव्दप्रारम्भकालमलमकृत । प्राचीनत्वेन समर्थितानि यानि नाटकानि दृश्यन्ते. तेषु यानि प्राचां कवीनां नाटकानि स्मर्यन्ते, यदि तान्यपि लभ्येरन्नवश्यमत्र विषये प्रचुरः प्रकाश आधीयेत ।

यद्यपि वेवर (Weber) प्रभृतयः कतिपये पाश्चात्यविद्वांसो भारतीयनाट्यकलाया मूलभूतं 'ग्रीक'नाट्यप्रणालीप्रचारमामनन्ति, तत्र च 'यवनिका'शव्दप्रयोगं साधन-त्वेनाङ्गीकुर्वते, परमिदं मतञ्च सर्वमान्यम्, लेवी ( Levi ) प्रभृतीनां पण्डितानां तत्र विसंवादात् । तदिदं नाटकीयं साहित्यं वहुजृम्भत, सर्वसाधारणजनहृदयावर्जनपटुत्वात् ।

केचित्तु—'नाट्यवेदं विधायादौ कवीनाह पितामहः ।
धर्मादिसाधनं नाट्यं सर्वदुःखापनोदनम् ॥
आसेव्यं तद्बुधस्तस्योत्थानं तु नाटकम्' ।

इति 'भावप्रकाश'मनुसरन्तो धर्मादिसाधनत्वेनानन्दप्रदत्वेन च नाटकस्य भूयांसं प्रचारमाहुः ।

### प्रतिमानाटक-प्रणेता

प्रस्तुतस्य प्रकाशयितुमस्य 'प्रतिमानाटकस्य' रचयिता क इति विचारोऽधुना कर्त्त-व्यस्तत्र स्थापनायां ग्रन्थादौ तदवसाने वा कुत्रापि ग्रन्थकृता निजं नाम नोपनिवद्ध-मिति महतीयं समस्या ।

---

यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्' ॥
'विलोक्य सङ्गमे रागं पश्चिमाया विवस्वतः ।
कृतं कृष्णं मुखं प्राच्या न हि नार्यो विनेर्ष्यया' ॥
'शरदि रविरश्मितप्ता बिभ्राणाः शोषमतिशयग्लपिताः ।
ज्वरिता इव लक्ष्यन्ते लङ्घनयोग्या महासरितः' ॥
इत्यादीनि पद्यानि सन्तीति ।

१—'History of Sanskrit classical literature' by M. Krishuama-chariar' अत्र विशेषजिज्ञासायां निरीक्षणीयम् ।

प्राचीनपुस्तकगवेषणयशस्विभिः म० म० त० गणपतिशास्त्रिभिर्मलयालमलिप्यां कतिचन नाटकानि लब्धानि, तेष्वेवेदमप्येकमासीत्, तत्र त्रयोदशस्वपि नाटकेषु प्रत्येकमवसाने ग्रन्थनाम निर्दिष्टमासीदिति तन्निर्णयः सुकरः समपद्यत, कर्त्तृनिर्देशो परमुदासितमेव, प्रस्तावनास्वपि तन्निर्देशप्रथाया अननुसरणात्। शास्त्रिमहोदया अन्तरङ्गवहिरङ्गपरीक्षणादिना निरचिन्वन् यदिमानि नाटकचक्रान्तःपातिरूपकाणि समानकर्त्तृकानि, प्राचीनानि चेमानि रूपकाणि, प्राचीने च काले नाटकचक्रप्रणेता भासो नाम कविः प्रथते स्म। यस्य स्वप्ननाटकस्य राजशेखरः स्मरति स्म, तन्न भिद्यतेऽत्रत्यात् 'स्वप्नवासवदत्त'नाटकात्। ततश्च स्वप्नवासदत्तस्य भासकृतत्वे सिद्धे तत्सहोपलब्धानामन्येषामपि भासकृतत्वं प्रतीयते। सर्वाणि च सहोपलब्धानि रूपकाणि समानकर्त्तृकानीति प्रतिमानाटकस्यापि भासकृतत्वं निश्चीयते।

म० म० रामावतारशर्माणस्त्वेषां 'मलयालम'लिप्यामुपलब्धानां त्रयोदशानामपि रूपकाणां कर्त्ता 'भास' एवेति विषये समदिहन्नेषां केवले केरलप्रान्त एवोपलम्भात्, अन्यत्रानुपलम्भाच्च। यस्य भासस्य गौरवं कालिदासोऽपि[2] मुक्तकण्ठमुदघोषयत्, जयदेवेनापि[3] यः सवहुमानं स्मृतः, कविताकामिनी पञ्चवाणस्य वाणस्यापि[4] यस्मिन्नादरभूमा, दण्डिनोऽपि[5] यत्र महती श्रद्धा; तस्य महाकवेः कमनीयानि त्रयोदशापि रूपकाणि केवलं केरलप्रान्त एवोपलब्धानीति तदीयसन्देहवीजम्। तेन तैर्महानुभावैः कस्यापि केरलकवेः कृतितयैतानि रूपकाणि सम्भावयद्भिरेषां भासरचितत्वं प्रति समशय्यत।

---

१—भासनाटकचक्रेपिच्छेकैः क्षिप्ते परीक्षितुम्। स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः॥

२—'प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य कथं वर्त्तमानस्य कवेः कालिदासस्य कृतौ बहुमानः'। मालविकाग्निमित्रम्।

३—यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय?॥ —प्रसन्नराघवम्।

४—'सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव'॥ —हर्षचरितम्।

५—'सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभिः।
परेतोऽपि स्थितो भासश्शरीरैरिव नाटकैः'॥ —अवन्तिसुन्दरीकथा।

तदेवं विवादविषयोऽयं रचयितृप्रश्नः, अथापि प्रसिद्धिमनुरुध्य भासकृतत्वमस्य प्रतिमानाटकस्य समर्थयामहे।

## महाकविभासस्य कालः

भासस्य काले निर्णये प्राचां कवीनां भासविषयका लेखा एव प्रमाणत्वेनालम्बनीयाः। यत्र—

१—कालिदासेन—'प्रथितयशसां भाससौमिल्लकविपुत्रादीनाम्' इत्यादरातिशयेन सह तदीया प्रचुरा प्रसिद्धिरुक्ता।

२—'गौडवहो' नामकप्राकृतप्रबन्धे वाक्पतिना 'भासम्मि' जलनमित्ते' इत्यभिधाय कथमेकाम्प्रतीङ्गितं कृतम्, सा च—भासो व्यासश्च प्राचीनमुनी 'विष्णुधर्म'-नामकं ग्रन्थं स्वस्वनिर्मितं प्रकर्षपरीक्षार्थं पावके प्रचिक्षिपतुः। वह्निश्च 'विष्णुधर्मं' भासकृतं नाधाक्षीत्। एषैव भासस्य ज्वलनमित्रता। इति अमुमेवार्थं जयानको नाम १२ श-शताब्दीसंभवः कविः स्वकृते पृथ्वीराजविजयनामके काव्ये—

'सत्काव्यसंहारविधौ खलानां दीप्तानि वह्नेरपि मानसानि।
भासस्य काव्यं खलु विष्णुधर्मं सोऽप्याननात् पारदवन्मुमोच'॥

इति निबद्धवान्।

३—अभिनवगुप्तपादः स्वकृते 'अभिनवभारती'नामके ग्रन्थे भासं स्मरन् पद्यमिदं तन्नाटकादुपन्यस्तवान्। महाकविना भासेनापि स्वप्रबन्ध उक्तः—

'त्रेतायुगं तदिह हन्त न मैथिली सा
रामस्य रागपदवीमृदु चास्य चेतः।
लब्धा जनस्तु यदि रावणमस्य कायं
प्रोत्कृत्य तन्न तिलशो न वितृप्तिगामी'॥ इति।

४—बाणभट्टः स्वीये हर्षचरिते भासस्य विषये 'सूत्रधारकृतारम्भैः' इत्याद्युक्तवान्।

५—दण्डिनापि भासः 'सुविभक्तमुखाद्यङ्गैः' इत्यादिनाऽवन्तिसुन्दरीकथायां स्मृतः।

६—प्रतिमानाटके बृहस्पतेरर्थशास्त्रं स्मृतम्, न तु चाणक्यस्य। एतेन चाणक्यात् प्राचीनता भासस्यापतिता, भासस्य—

'नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत्'॥

पद्यं समुद्धरता चाणक्येनापि सा समर्थिता।

७—राजशेखरः स्वकविविमर्शे लिखितवान्—

'भासो रामिलसौमिलौ वररुचिः श्रीसाहसाङ्ककविः
मेण्ठो भारविकालिदासतरलास्कन्धः सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वे वयम्' ॥
'कारणं तु कवित्वस्य न सम्पन्नकुलीनता ।
धावकोऽपि हि यद्भासः कवीनामग्रिमोऽभवत्' ॥ इति ।

८—आचार्यहेमचन्द्रेण दण्डिकृत'कविहृदय'व्याख्यायां स्वकृतायां लिखितं भासप्रसङ्गे—

'सम्प्रति परां काष्ठामारूढेनापि भासेन भूतपूर्वा स्वीयदशा न विस्मृता । यतोऽनेन पूर्वचरितं घटकर्परेणोदकवहनमेव प्रतिज्ञातम् । प्रतिज्ञां चेमामसहमानाः परे कवयः परिहसितुमनसो विक्रमार्कसभ्यमेनं भासं तज्जातिस्मारकघटकर्परनाम्ना व्यवजहुः, क्रमेण च स एव व्यपदेशो भासमहाकवेः सुप्रसिद्धः सम्पन्नः' ॥

९—भरतप्रवर्त्तितनाटकीयनियमानां समादरो भासेन स्वकृतौ न कृतः, यथा स्थापनायां न कविनामनिर्देशः । अवतरणस्य 'स्थापना'नाम्ना निर्देशो न प्रस्तावनानाम्ना । नान्दीपाठात् परतः सूत्रधारप्रवेशः । विनापि भरतवाक्यं प्रबन्धसमाप्तिः । मृत्युनिद्रायुद्धानां रङ्गमञ्चेऽवतारणा च ।

१०—भासेन पाणिनिप्रवर्त्तितनियमानामनुरोधो नाचरितस्तेन तस्य पाणिन्यपेक्षया प्राग्भवत्वम् ।

११—रसपरिपाकमहिम्ना भाषाप्रवाहसाम्येन च भासस्य व्यासवाल्मीकिसाम्यमातिष्ठन्ते कतिपये । तदेभिरेकादशभिरपि कारणैर्भासस्य कालिदासात् प्राचीनत्वं स्थाप्यते, चाणक्यकालेऽपि भासस्य कवितायाः प्रचारात्ततोऽपि प्राचीन एव सः । अतश्च कवितागतभाषायाः सूक्ष्मेक्षिकया परीक्षणेन भासस्य कालोऽवश्यमेव कालीदाससमयात् प्राक् सारणीय इति मन्तव्यम् ।

यस्य काले निर्धारणीये इयती चिन्ता कर्त्तव्या भवति, तस्य चरित्रविषये किमुच्यतामिति मौनमास्थीयते ।

'प्रतिमानाटक'सोदराणां रूपकाणां सङ्ख्या त्रयोदश, तत्र—

१—मध्यमव्यायोगे—हिडिम्बानामराक्षस्या सह भीमस्य प्रणयः, घटोत्कचनामकपुत्रद्वारा चिरविरहितयोस्तयोः सङ्गश्च वर्णितः ।

२—दूतघटोत्कचे—हिडिम्बाया भीमस्य चात्मजस्य महाभारतप्रसिद्धं चरितम्।

३—कर्णभारे—कर्णस्योदात्तं चरित्रं वर्णितम्। तेन हि देवेन्द्राय कवचकुण्डले प्रदायापि नोदासितम्।

४—ऊरुभङ्गे—भीमेन प्रियापरिभवतप्तेन दुर्योधनस्य जङ्घे भग्ने। संस्कृत-साहित्ये शोकान्तमिदमेवैकं रूपकम्।

५—दूतवाक्ये—दुर्योधनस्याभिमानेन सहैव कृष्णस्य सदाशयता वर्णिता।

६—पञ्चरात्रे—कल्पिता कथा, द्रोणेन कौरवाणां यज्ञे भागो गृहीतस्तद्दक्षि-णायां पाण्डवानामंशं राज्यं याचितवान्। पञ्चदिनाभ्यन्तरेऽन्वेषणे क्रियमाणे लभ्यं तदिति दुर्योधनस्याश्वासने द्रोणेन तथा कृतम्।

७—बालचरिते—कृष्णस्य बाललीला भागवताधारेण वर्णिता।

८—अविमारके—या कथा सा संभवतो गुणाढ्यकृतबृहत्कथातो गृहीता। राजकुमारस्याविमारकस्य कुन्तिभोजराजकुमार्या कुरङ्गया सह प्रणयोऽत्र वर्णितः।

९—प्रतिज्ञायौगन्धरायणे—मन्त्रिणो यौगन्धरायणस्य नीतिरुदयनवासव-दत्तयोः प्रणयकथा चोपनिबद्धा।

१०—स्वप्नवासवदत्ते—मन्त्री यौगन्धरायणः पद्मावत्या मगधराजभगिन्या सहोदयनस्य विवाहं कारयित्वा राजशक्तिं वर्द्धयितुमैच्छत्। परन्तु ध्रियमाणायां वासवदत्तायां न सम्भवीदमिति कदाचिदुदयने मृगयार्थंगते मन्त्रिसम्मत्या—'वासवदत्ता दग्धा' इति प्रचार्यते। राज्ञा चिरं विषद्यापि तत्प्रेमणि न मालिन्यमानीयते। पश्चात् पद्मावत्यां परिणीतायां स्वप्नक्रमेणैव वासवदत्ता लभ्यते। अत्रालोचकानामादरातिशयः समुचित एव।

११—चारुदत्ते—वसन्तसेनया सह चारुदत्तस्य प्रणयकथोपनिबद्धा। अस्य चत्वार एवाङ्का उपलभ्यन्ते।

१२—अभिषेके—रामायणनिर्दिष्टा वालिवधादारभ्य रामराज्याभिषेकान्ता कथा वर्णिता। अत्र महती कथा संक्षिप्योपनिबद्धा या विरसायते।

१३—प्रतिमानाटकस्य कथाभागोऽत्रैव ग्रन्थेऽन्यत्रोल्लिखित इति तत एवावसेयः।

## प्रकृतटीकाऽवतारः

यदैवाहमस्य रूपकस्य व्याख्यार्थं प्रकाशकमहोदयैराग्रहीतस्ततः प्रभृति चिन्त-

यितुमारभे किमहं कुर्यामिति ? 'सरलो ग्रन्थः' इति ज्ञातवतस्तु मम प्रवृत्तिर्मन्देव समजनि, परं वर्त्तमानसमये टीकामन्तरा न भवति प्रवृत्तिः प्रवेशश्चच्छात्राणाम्।

ग्रन्थमर्यादामहिम्ना ममात्र प्रवृत्तिर्न पाण्डित्यकण्डूत्यपनुत्तय इति व्याख्यानेऽत्र पाण्डित्यसमावेशनाद्विरतोऽभूवम्। प्राचीनटीकात्रयमध्ये म. म. त. गणपतिशास्त्रिणां टीका मामुपाकृतेति तदर्थमहमाभारं बिभर्मि।

हिन्दीरूपान्तरेण लाभो भवतीति मम बुद्धिपथे नायाति, तदनुसारेणैव पूर्वमहमिह तन्निवेशनं नान्वमंसि, परमाधुनिकाध्यायिवर्गसौविध्यानुध्यानवद्धपरिकरप्रकाशकमहाशयानुरोधं निषेद्धुमपारयन् पारवश्येनेव तदप्यत्रायूयुजम्।

अवसाने चास्य 'प्रास्ताविकस्य' सुधियश्छात्रांश्चात्र स्वदक्पातायाभ्यर्थयमानः क्षमास्त्रुटीनां याचे। शमिति।

विनीतः—

श्रीरामचन्द्र मिश्रः

# कथासार

महाकवि भासने केवल रूपक लिखनेमें अपना जीवन लगाया, उनके द्वारा लिखित रूपकोंकी संख्या १३ है। उन्हीं १३ रूपकोंमें एक यह प्रतिमानाटक है जो आकारमें अपने सभी सोदरोंसे बड़ा और प्राजल है। इसमें ७ अङ्कोंमें रामायणकी कथाको नाटकोपयुक्त रूप देकर समाविष्ट किया गया है। सर्वप्रथम भासने ही नाटकके रूपमें रामकथाकी अवतारणा की, जिसमें वह पूर्णतया सफल हुए। महाराज दशरथने अपने सर्वगुणसम्पन्न तथा लोकप्रिय पुत्र रामको राज्याभिषिक्त करना चाहा। सारी तैयारियां की गईं। बाजे-गाजेके साथ रामका राज्याभिषेक हो ही रहा था कि कैकेयीके मनमें कुचक्र उठा। उसने अपने पुराने दो वरदान देनेके लिये महारज दशरथकी सत्यसन्धताको ललकारा। महाराजने व्याकुलहृदयसे उसको वर दिये, जिसमें एकसे उसने रामका वनवास तथा दूसरे वरसे भरतका राज्याभिषेक मांगा। शोकसाम्राज्य सर्वत्र छा गया। पिताकी सत्यपरायणताकी रक्षा के लिये राम वन चले, उनके साथ पतिपरायणा सीता तथा भ्रातृप्रेमी लक्ष्मण भी वन गये। महाराजका पुत्रवियोगजन्य खेद उनकी मृत्युका कारण बना। सर्वत्र भयानक उदासी छा गई। भरत भी उस समय अपने ननिहालमें थे। महाराजकी अस्वस्थताकी सूचना पाकर वह चिन्तितहृदय हो अयोध्याके लिये चल पड़े। रास्तेमें उनका हृदय अपने चिरवियुक्त बन्धुबान्धवसे मिलनेकी कल्पनासे आनन्दोत्फुल्ल होता रहा। अयोध्याके समीप आने पर नगरविश्रामके लिये ठहरे तो उन्हें प्रतिमागृह दीख पड़ा, जिसमें इक्ष्वाकुवंशज मृतराजाओंकी प्रस्तरमूर्त्तियां रखी गई थीं। कौतूहलवश भरतने उसमें जाकर वहाँके पूजकसे उन मूर्त्तियोंका परिचय प्राप्त किया। उन प्रतिमाओंमें दशरथकी प्रतिमा भी थी, यहाँ मृतव्यक्तिकी ही प्रतिमा रखी जाती है, इसके द्वारा भरतने पितृमरणकी सकारण सूचना पाई, और मूर्च्छित दशामें ही माताओंका आश्वासन भी प्राप्त किया। उनके राज्याभिषेककी सारी सामग्री प्रस्तुत थी, परन्तु उन्होंने सबको ठुकरा दिया। कैकेयीको भी खरी-खोटी सुनाई, और तत्काल रामके पास वनको चल दिये। वनवासकी दशामें भी राम, सीता और लक्ष्मण अतिप्रसन्न थे, उन्हें भरतके आने पर उनके भ्रातृप्रेमसे चकित रह जाना पड़ा। भरतने विनयावनत होकर रामसे आग्रह किया कि वे अयोध्या लौट चलें, परन्तु पिताके वचनकी रक्षाकी दुहाई देकर रामने भरतको राज्य संभालनेको बाध्य किया। भरतने भी रामसे दो

शर्तें स्वीकार करवाई, एक यह कि चौदह वर्षोंके बाद राम अपना राज्य संभाल लेंगे, और दूसरी यह कि भरत रामकी चरणपादुका ले जायेंगे, और उसीका अभिषेक कराकर राज्यकार्य खुद देखा करेंगे। भरतके अयोध्या लौट आनेपर दशरथके वार्षिक श्राद्धके लिये चिन्तित राम जब सीतासे परामर्श ले रहे थे, उसी समय संन्यासीका वेष धारणकर रावण वहाँ उपस्थित हुआ, रामने उसे विद्वान् समझकर उसके सामने अपनी समस्या पेश की, उसने काञ्चनमृगको सर्वोत्तम बताया। माया-द्वारा काञ्चनमृग भी वहाँ दीख पड़ा। लक्ष्मण आश्रममें नहीं थे, इसलिये रामको ही काञ्चनमृगको लाने जाना पड़ा। इधर सीताको एकाकी देख रावणने अपना रूप धारण किया और उन्हें हरणकर लङ्का ले चला। मार्गमें सीताके उद्धारार्थ दशरथका मित्र तथा कृतज्ञ जटायुने रावणसे लड़कर उसके हाथों वीरगति पाई। इसी मध्यमें भरतने सुमन्त्रको रामको देख आनेके लिये वन भेजा, उनके वहांसे लौट आनेपर भरतको सीताहरणकी खबर हुई। रामकी सहायताके लिये भरतने सेना सजाई। इधर श्रीराम रावणको मारकर सीतासहित अयोध्याके लिये चले। रास्ते में पुनः उसी आश्रममें ठहरे, जहाँ पहले रहा करते थे। इसी समय भरत भी अवधिको पूर्ण समझकर मातृगण, मन्त्रिसमूह और प्रजावर्गके साथ अभिषेक जल लिये वहीं पहुंचे। भेंट हुई, वहीं रामका राज्याभिषेक हुआ और वे सभी स्वयमागत पुष्पक विमान द्वारा अयोध्या आये।

---

# अङ्कक्रमसे कथा

## प्रथम अङ्क

रामके राज्याभिषेककी तैयारियां हो रही थीं, महाराज दशरथके आदेशानुसार छत्र, चमर, नदीजल, मङ्गल घट सभी चीजें प्रस्तुत कर ली गई थीं। राम राजा होंगे, इससे समूचे नगरमें आनन्द तरङ्गित था। सीता सहेलियोंके साथ विनोदकर रही थीं, अचानक उन्होंने अवदातिका नामक एक सखीके हाथमें वल्कल देख लिया। उन्हें वल्कल पहननेकी इच्छा हुई। भावीवश उन्होंने वल्कल पहन लिये। इधर कैकेयीको अपने उभय वरदानोंकी याद आई। उसने बद्धप्रतिज्ञ तथा सत्यसन्ध महाराजको अपनी प्रतिज्ञा पूरी करने के लिये विवश किया। कैकेयीने प्रथम वर में चौदह वर्षोंके लिये रामका वनवास तथा दूसरे वरमें भरतको राज्य मिले यह प्रार्थना की। राजाने सत्यकी रक्षा की। रामका राज्याभिषेक होते होते रह गया।

वह वल्कल धारण करके वनको गये। सीताने भी साथ दिया। लक्ष्मणने भी भ्रातृप्रेम-को मूर्त्तरूप देकर उनका अनुगमन किया।

## द्वितीय अङ्क

वृद्ध महाराजको शोकने घेर लिया, पुत्रवियोगने उनको शय्याशायी बना दिया। वे नानाप्रकारका विलाप करने लगे। कैकेयीको उसके इस अविचार तथा कुकृत्यपर उन्होंने खूब धिक्कारा और रानियोंने उन्हें धीरज बँधाने तथा आश्वासित करनेका यत्न किया, किन्तु सब व्यर्थ। हा राम, हा लक्ष्मण, हा सीते यही रट लगाये उन्होंने प्राण त्यागे। सर्वत्र कुहराम मच गया।

## तृतीय अङ्क

जिस समय महाराज मृत्युकी ओर बढ़ रहे थे, भरत ननिहालमें थे। सूचना पाकर रथारूढ हो वह अयोध्याकी ओर चल पड़े। वह बहुत दिनोंके बाद अयोध्या आरहे थे। मनमें बड़ी बड़ी उमंगें थीं। बन्धुओंसे मिलने, महाराजके दर्शन और माताओंके स्नेहके लिये आत्मा लालायित हो रही थी। नगरके समीप आनेपर कुछ क्षणके बाद नगरमें प्रवेश करनेका गुरुजनोंका संवाद मिला। संयोगवश पासमें ही वर्त्तमान प्रतिमागृहको विश्राम स्थानके रूपमें चुना। यहां सूर्यवंशी दिवंगत राजाओं-की प्रस्तरमूर्त्तियां रखी जाती थीं। पूछने पर वहांके पूजकने सभी मूर्त्तियोंके परिचय दिये। पिताकी मृत्यु तथा रामवनगमनकी सूचना मिलनेसे उनके पैरों तलेकी धरती खिसक गई। इससे उनको भयानक तकलीफ हुई। मूर्च्छित होकर वे जमीन पर गिर पड़े। इसी समय संयोगवश कौसल्या आदि रानियां आवश्यक रीति पूरी करनेके लिए वहां आईं। पुत्रकी दशा देखकर उनलोगोंमें हाहाकार मच गया। भरतको चेतना आई। माताओंकी दशा देख उनका दिल दहल उठा। कैकेयीको खूब कोशा। राज्याभिषेकका सारा साज ठुकराकर रामकी खोजमें भरतने वनकी यात्रा की।

## चतुर्थ अङ्क

भरत वनमें श्रीरामके आश्रममें पहुँचे। आर्य रामको इसकी सूचना दी गई। भरतके मनमें सन्देह हो रहा था कि कहीं कैकेयीपुत्र समझकर वे मिलनेसे इनकार न कर दें। इतनेमें लक्ष्मण आकर गले लगे और रामसे साक्षात् कराया। प्रेम-पारावार उमड़ चला। भरतने रामसे अयोध्या चलकर राजकार्य संभालनेके लिये बहुत प्रार्थना की। इस पर उन्होंने पिताजीकी प्रतिज्ञाकी याद दिलाकर भरतको राजधानी लौटनेको बाध्य किया। रामके इस आश्वासन पर भरत अयोध्या लौटे

कि राम चौदह वर्षोंके वाद वनसे लौटकर अपना राज्य संभालेंगे, भरत तवतकके लिये श्रीरामकी चरणपादुकाएं लेकर अयोध्या को चल पड़े।

## पञ्चम अङ्क

महाराज दशरथका श्राद्धदिवस समीप आया, रामको चिन्ता हुई कि पितृश्राद्ध किस तरह होगा ? उन्होंने सीतासे परामर्श लिया। सीताने राय दी कि आप अपनी परिस्थितिके अनुकूल फलमूलसे श्राद्ध कर लें, राजोचित उपकरणोंसे तो भरत पिताजीका श्राद्ध करेंगे ही। इसी प्रसङ्गमें संन्यासीके रूपमें रावण वहां उपस्थित हुआ। स्वागत सत्कारके वाद जब उसने अपना परिचय श्राद्धकल्पज्ञ ब्राह्मणके रूपमें दिया तव रामने उससे पितृश्राद्धके विषयमें प्रश्न किया। उसने इस कार्यके लिये काञ्चनपार्श्व मृगकी प्रशंसा की। मायाने काञ्चनपार्श्वको प्रकट किया। लक्ष्मण तो पहले से ही आश्रममें नहीं थे। अतः रामको काञ्चनपार्श्व मृगके पीछे जाना पड़ा। इसी सूनेपनसे लाभ उठाकर रावणने अपना रूप प्रकट किया, सीता भयसे कांप उठी, परन्तु क्या होता, रावण सीताको हरकर लङ्का ले चला।

## छठा अङ्क

सीताको रावण ले जा रहा था, वह पुकारती तथा रोती जा रही थी। उसकी पुकारपर दशरथका कृतज्ञ जटायुनामक गृध्रराजने रावणसे युद्ध कर सीताको वचानेका प्रयत्न किया, उसने अपने चञ्चुप्रहारसे रावणको रुधिराक्त कर दिया, परन्तु अभाग्य, रावणने तलवारकी चोटसे उसे धराशायी वना दिया। इसी वीच भरतने सुमन्त्रको रामसे मिलनेके लिये भेजा, और उसने वनमें आकर रामको नहीं देखा, सीताहरणका समाचार सुना। लौटकर भरतको खवर दी। भरतको वड़ी चोट पहुँची। उनका कैकेयीके प्रति विकार और भड़का, उन्होंने खूब खरी-खोटी सुनाई। भरतने रामकी सहायताके लिये सेनाको तैयार किया। अन्तःपुरमें सर्वत्र इस समाचारसे हाहाकर मच गया। कौसल्या मूर्च्छित हो गई।

## सप्तम अङ्क

रावणका नाश करके रामने सीताका उद्धार किया, इसके वाद रामके साथ सीता, लक्ष्मण तथा लङ्कायुद्धमें रामके और सहायक मित्र अयोध्याको चले। मार्गमें उसी आश्रममें ठहरे, जिसमें राम रहा करते थे। मुनियोंने वनोपलभ्य सामग्रीसे उनका स्वागत किया। सीताको देखकर मुनिपत्नियोंको वड़ा आनन्द हुआ, जिनके साथ सीताका सौहार्द घनिष्ठ हो गया था। रामने सीताको एक एक वातको याद दिलाई

यह वही वृक्ष है जिनको छोटे पौधेके रूपमें देखा था, यह वही स्थान है जहां भरतको आया देख हरिणके बच्चे भयसे भाग खड़े हुए थे यहीं काञ्चनमृग दीख पड़ा था, इत्यादि। इसी समय भरत माताओं और अमात्योंको साथ लिये वहीं पहुंचे। उनके साथ एक बड़ी सेना भी थी। सब वृत्तान्त सुनकर भरतको बड़ा आनन्द हुआ। अब रामवनवासकी अवधि पूरी हो गई थी। विलम्ब भरतको असह्य हो रहा था। उन्होंने रामसे अपना वादा पूर्ण करनेका अनुरोध किया। माताओं और अमात्योंने भी दबाव डाला। वहीं रामका राज्याभिषेक हुआ। शोक प्रसन्नतामें परिणत हो गया। पुष्पक विमानपर आरूढ होकर सभी अयोध्या आये। प्रजाओंको रामकी छत्रच्छाया मिली।

---

# प्रमुखपात्रालोचन

**राम**—इस नाटकमें रामके चरित्रका चित्रण अच्छा नहीं हो सका है, सीताको वल्कल पहने देख वह भी वल्कल पहननेको ललच गये यह उनके ऐसे धीरोदात्त नायकके अनुरूप नहीं हुआ। रावणने हिमालयपर काञ्चनमृगका होना कहा और रामने विश्वास कर लिये, इससे भी उनकी अविचारपरायणता अथवा मन्दमतिता प्रतीत होती है। जिस रामको समुद्रवसना पृथ्वीका त्याग करके पिताके भक्तके रूपमें चित्रित किया गया है, जिस रामने अपकारपरायण कैकेयीके प्रति असामान्य क्षमा और औदार्य प्रकट किया है, उसीको इतना हलका और परबुद्धिचित्रित किया गया है, यह अच्छा नहीं लगता। रामके चरित्रमें त्याग, पितृभक्ति, भ्रातृप्रेम, महानुभावता, कठोरसाधना, प्रभृति गुणोंका जो चित्रण है, वह तो आधारभूत कथानकसे ही आया है, उसमें नाटककारकी कुछ विशेषता नहीं है। केवल एक जगह रामके स्वाभाविक औदार्यका चित्रण कविने किया है—जैसे 'दिष्ट्या स एवाभिरामः, महाराज एव महाराजः'।

**सीता**—सीताको नाटककारने आदर्श रमणीके रूपमें चित्रित किया है। उसका स्वभाव सरल, हृदयमें नारीहृदयोचित अनन्त माधुर्य, पतिपरायणता वगैरह गुण उसे आदर्शरमणी सिद्ध करते हैं। सास, ससुरके प्रति उसके हृदयमें अपार श्रद्धा है। स्वामीके लिये उसके हृदयमें अगाध स्नेह है, जो उसके वनगमनके अध्यवसायसे प्रकट होता है। वह विधिकृत रामवनवासको सानन्द स्वीकार करती है। अभिषेकके सुनहले प्रभातमें वनवाससदृश वज्रपातसे भी वह अधीर नहीं हो जाती। उसका

कर्त्तव्यनिर्धारण अक्षुण्ण बना रहता है। उसके शोकमें भी हर्षका मिश्रण है। वह गम्भीर है, लक्ष्मण कैकेयीके कुचक्रसे क्षुब्ध होकर जगत्को तरुणीशून्य करनेके लिये धनुष उठाना चाहते हैं तो वह सावधानीसे कहती है—'आर्यपुत्र, रोदितव्ये काले सौमित्रिणा धनुर्गृहीतम्' ( माताके मतिविभ्रमपर, महाराजके जीवित-संशय-कालमें क्रोध ? यहतो रोनेका समय है ) कैसी उदात्त भावना है।

सीता सुखमें, दुःखमें, संपत्तिमें, विपत्तिमें रामकी धर्मिणी है, उसका सतीत्व उसके जीवनका व्रत है, जिसके लिये वह सतत जागरूक है।

**भरत**—भरतका चरित्र एक आदर्श चरित्र है, रामके प्रति उनका प्रेम उनकी श्रद्धा, उनका भक्तिभाव अपूर्व है। जब उनको ज्ञात हुआ कि उनकी माता कैकेयी ही इस अनर्थपरम्पराकी जड़ है, उसीके कारण दशरथकी मृत्यु हुई है, रामको वन जाना पड़ा है, सारे प्रजामण्डलको शोकमें गोते लगाने पड़े हैं और यह उदासी छाई हुई है, तब वह रोष, लज्जा और ग्लानिसे विह्वल हो उठते हैं। मातामहकुलसे अयोध्या लौटनेपर सुमन्त्र उनसे कैकेयीको प्रणाम करनेके लिये कहते हैं तब वह उसको माता कहनेसे ही विरत हो जाते हैं। उनका खेद उनके व्यवहार ज्ञानपर विजय पाता है, वह एक नया नियम प्रचारित करते हैं,—'आजसे पतिविद्रोहिणी स्त्री मातृत्वके आसनपर प्रतिष्ठित नहीं हो'। उनका आत्मत्याग अलौकिक है। उनकी तपस्या रामसे कम नहीं है, वह अन्तःकरणकी प्रेरणासे रामकी सेवामें वनवास करना चाहते हैं, परन्तु रामके अनुरोधसे अयोध्याको ही तपोवन में परिणतकर वहीं रहते हैं। उनके लिये सुखभोग कर्त्तव्यनिष्ठाके सामने नितान्त तुच्छ है, वस्तुतः उनका चित्रण योगिराजके रूप में हुआ है।

**लक्ष्मण**—लक्ष्मणके चरित्रचित्रणका उपक्रम इस नाटकमें वस्तुतः अच्छा हुआ है। इसमें सजीवता, वास्तविकता, सब कुछ है। रामके अतर्कितोपनत वनवाससे वह इतना क्षुब्ध हो जाते हैं कि वे दुनियांसे स्त्रीत्वको ही मिटा देना चाहते हैं। वह रामको धनुष उठानेकी सलाह देने लगते हैं:—

'क्रमप्राप्ते हृते राज्ये भुवि शोच्यासने नृपे।
इदानीमपि सन्देहः किं क्षमा निर्मनस्विता' ॥

रामके प्रति लक्ष्मणका प्रेम अत्यन्त गंभीर तथा हार्दिक है। वह अयोध्याके सुखोपभोगको ठुकराकर रामके परिचरणका व्रत लेते हैं। उनका अपना अस्तित्व रामके अस्तित्वमें छिप गया है। सीताहरणके अवसरपर लक्ष्मणको दूर हटाकर उस

चरित्रके निखारमें बाधा डाल दी है जिसकी सृष्टि वह प्रारम्भसे करते गये हैं। आगे चलकर भी लक्ष्मणको भूलसा गये हैं, इससे उनके चरित्रपर परदा-सा पड़ गया है।

कैकेयी—भासने कैकेयीको चरित्रसौष्ठवकी दृष्टिसे बहुत परिवर्त्तित करके पेश किया है। रामायणकी कथामें क्रान्तिकारी परिवर्त्तनकर दिया है। दशरथको ऋषिका शाप था, इसलिये रामका वनवास अवश्यंभावी बात थी। इसमें कैकेयीका कुछ दोष नहीं। वह किसीके बहकावेमें आकर ऐसा नहीं करती है। उसको कर्त्तव्यका ज्ञान है। वह केवल १४ दिनोंके लिये ही रामके वनवासकी कामना करना चाहती थी, किन्तु संभ्रमवश चौदह वर्ष कहा गया। इसमें दो बातें खटकनेवाली हैं।

१—यदि दशरथको अन्धमुनिका शाप था और इस बातको वसिष्ठ वामदेव आदि मुनिगण भी जानते थे, तो किसी औरने यह बात क्यों न कही। कैकेयी ने ही इसको क्यों प्रकट किया।

२—चौदह दिनकी जगह चौदह वर्ष कहा गया तो उसके संशोधनका प्रयास क्यों न किया गया। इतना होनेपर भी कैकेयीका चरित्र बहुत अच्छा है।

# पात्रपरिचयः

## पुरुषाः—

१ सूत्रधारः—अभिनयप्रवर्त्तकः ।
२ राजा—दशरथो नामायोध्याधीशः ।
३ रामः—दशरथ ज्येष्ठपुत्रः, कौसल्यानन्दनः, एतन्नाटकनायकश्च ।
४ लक्ष्मणः—दशरथस्य सुमित्रागर्भसंभवस्तनयः ।
५ भरतः—कैकेय्यासुतन्नोदशरथपुत्रः ।
६ शत्रुघ्नः—लक्ष्मणसोदरः ।
७ सुमन्त्रः—दशरथमन्त्री ।
८ सूतः—भरतस्य सारथिः ।
९ रावणः—लङ्काधिपतिरेतन्नाटकप्रतिनायकश्च ।
१० वृद्धतापसौ—रावणजटायुयुद्धदर्शकौ साक्षिणौ ।
११ देवकुलिकः—प्रतिमागृहपूजाधिकृतः ।
१२ तापसः—रामवनवास्तव्यस्तपस्वी ।
१३ नन्दिलकः—तापसपरिजनः ।
१४ भटः—राजपुरुषः ।
१५ सुधाकारः—प्रतिमागृहे सुधालेपकर्त्ता ।
१६ काञ्चुकीयः—बालाकिर्नामान्तः-पुरचरो वृद्धः ।

## स्त्रियः—

१७ नटी—सूत्रधारपत्नी ।
१८ कौसल्या—दशरथस्य प्रथमपत्नी रामस्य माता ।
१९ कैकेयी—दशरथस्य द्वितीयपत्नी भरतस्य माता ।
२० सुमित्रा—दशरथस्य तृतीयपत्नी लक्ष्मणस्य माता ।
२१ सीता—जनकतनया रामभार्या नायिका ।
२२ अवदातिका—सीतायाः सखी वल्कलापहारिणी ।
२३ चेटी—सीतायाः परिचारिका ।
२४ प्रतिहारी—दशरथराजभवने द्वारपालिका ।
२५ विजया—कैकेय्या अन्तःपुरे प्रतिहारी ।
२६ नन्दिनिका—कैकेय्याश्चेटी ।
२७ तापसी—सीतायाः उटजसहचरी रामवनतपस्विनी ।

# प्रतिमानाटकम्

## 'प्रकाश' नामक-संस्कृत-हिन्दीटीकाद्वयोपेतम्

### अथ प्रथमोऽङ्कः ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

यदिङ्गितं चक्रमदृष्टसाध्यं विनैव मृद्दण्ड—पटैकदेशान् ।
ब्रह्माण्डभाण्डानि सृजत्यखेदं तं कुम्भकारं प्रणतः प्रपद्ये ॥ १ ॥
यो गुरुर्मम विकास्य शेमुषीं कल्पनामपि न जातु जग्मुषीम् ।
सिद्धिमानयत मां दयामये तस्य पादसरसीरुहे श्रये ॥ २ ॥
ध्यात्वा नतेन शिरसा 'जयमणि' 'मधुसूदनौ' पितरौ ।
प्रतिमा 'प्रकाश' विधये प्रयते श्रीरामचन्द्रोऽहम् ॥ ३ ॥
सन्तो गुणेन तुष्यन्ति स नैकान्तेन दुर्लभः ।
दोषाविलेऽपि तेनात्र दृक्पातः क्रियतां बुधैः ॥ ४ ॥

नाटकप्रणयनप्रथमाचार्यत्वेनाधुनावधिसंस्तुतः प्रधानकविर्भासोऽभिनययोग्यं प्रतिमाऽभिधानं नाटकं निर्मित्सुः प्रारम्भे तस्य निर्विघ्नाभिनयसम्पत्ति विद्वत्समुदयप्रतिपत्तिपरिपन्थिदुरितक्षयसाधनं पूर्वरङ्गप्रधानाङ्गं मङ्गलश्लोकपाठं तदङ्गश्चैव च कथांशनिर्देशं प्रयोगनिपुणेन सूत्रधारेण प्रथमाचरणीयं विभावयंस्तस्य तावत् प्रवेशमाह—'नान्द्यन्ते ततः प्रविशति सूत्रधार' इति । नान्द्या अन्ते इति समासः । नान्दी—आनकः, 'दुन्दुभिस्त्वानको भेरी भम्भा नासूश्च नान्द्यपि' इति वैजयन्ती । सा चात्र वद्यान्तराण्यप्युपलक्षयति । तथाचाभिनेयनाटकीयकथारम्भपूर्वाङ्गभूते

( नान्दी के अन्त मेंसूत्रधार का प्रवेश )

सूत्रधारः—

सीताभवः पातु सुमन्त्रतुष्टः सुग्रीवरामः सहलक्ष्मणश्च ।
यो रावणार्यप्रतिमश्च देव्या विभीषणात्मा भरतोऽनुसर्गम् ॥ १ ॥

---

आनकादिवाद्यवादने समाप्त इत्यर्थः पर्यवस्यति । यद्वा—नान्देरानन्दस्तत्या इयं नान्दी–गीतवाद्यवादनादिक्रिया, तस्या अन्ते–उपरमे इत्यर्थः, तदनुष्ठानं च देवता-परिषदादिप्रसादनाय क्रियते । ततः—तदुत्तरकालम् , नान्दीसमाप्त्यव्यवहितोत्तरकाल इति तु नार्थः, मध्ये वाद्यादि स्थापनादौ व्यापारान्तरेऽनुष्ठीयमानेऽपि पौर्वापर्यान्या-घातात्, अव्यवधानांशस्याविवक्षितत्वात्, तत्त्वेऽप्यधिकचमत्काराऽनाधानात् । नान्दीलक्षणं साहित्यदर्पणे यथा—'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति शब्दिता' ॥ इति ।

प्रविश्य सूत्रधारः कर्त्तव्यस्य कर्मणो निर्विघ्नसम्पूर्त्तये मङ्गलं विधत्ते—सीताभव इति । सीतायाः स्वनामख्याताया जनकदुहितुर्भवः क्षेमः तत्कारणमित्यर्थः, कार्यका-रणयोरभेदोपचारकृत ईदृक्प्रयोगः । सुमन्त्रतुष्टः–शोभनेन मन्त्रेण मुदितः । सह-लक्ष्मणः–लक्ष्मणसहितः, अथवा भ्रातुरर्थे वनवासतत्परिचरणस्वप्रेयसीवियो-गादिक्लेशानां सोढा लक्ष्मणस्तदभिधानो भ्राता यस्येत्यर्थः । विशेषणद्वयमपीदं रामस्य । सुग्रीवरामः—शोभनकण्ठश्चासौ राम इति कर्मधारयः । कर्तृपदमिदम् अनुसर्गम्–सर्गे सर्गे जन्मनि जन्मनि प्रतिप्रादुर्भावमित्यर्थः, वीप्सायामव्ययीभावः । पातु–रक्षतु अस्मान् युष्मांश्चेति शेषः, तत्रास्मानिति पक्षे प्रयोगसाफल्यप्रदानमत्र पालनेनाभिप्रेतम् , युष्मानिति पक्षे च यथा भवदभीष्टं फलं दद्यादिति ।

उत्तरार्धेन पुनरपि रामं विशिनष्टि—यो रावणार्यप्रतिम इति । रावणारिः–रावणशत्रुः, न विद्यते प्रतिमा सादृश्यं यस्यासौ अप्रतिमः निरुपम इत्यर्थः । प्रतिमा शब्दस्य प्रसिद्धं मूर्त्तिवाचकत्वं तथापि—"सरोरुहं तस्य दृशैव निर्जितं जिताः स्मितेनैव विधोरपि श्रियः । अतद्द्वयीजित्वरसुन्दरान्तरे न तन्मुखस्य प्रतिमा चराचरे" इति नैषधीये सादृश्यपरत्वमपि प्रतीतमिति बोध्यम् । देव्या–सीतया, सहित इति शेषः । विभीषणः–रावणानुजः, तस्मिन् आत्मामे स्वसदृशे स्वसमसुखदुःखे इति तात्पर्यम् ।

---

सूत्रधार—सीता के आनन्ददाता, अच्छे मन्त्र के पक्षपाती, सुन्दर कण्ठशाली, (अथवा सुग्रीव के मित्र) लक्ष्मण के सहचर, सीताहरण द्वारा कृतापराध रावण के निहन्ता, विभीषणाभिन्नहृदय (अथवा शत्रुभयङ्कर) भगवान् राम जन्म-जन्म में हमारी तुम्हारी रक्षा करें ॥ १ ॥

( नेपथ्याभिमुखमवलोक्य )

आर्ये ! इतस्तावत् ।

( प्रविश्य )

नटी—आर्य ! इयमस्मि ।

अय्य ! इअह्मि ।

सूत्रधारः—आर्ये ! इममेवेदानीं शरत्कालमधिकृत्य गीयतां तावत् ।

नटी—आर्य ! तथा ।

अय्य ! तह । ( गायति )

---

रतः-अनुरक्तः च अस्तीति पदमध्याहार्यम् । अथ चात्र-सीता-राम-सुमन्त्र-सुग्रीव-लक्ष्मण-रावण-विभीषण-भरताभिधानानि नाटकीयानि प्रमुखपात्राणि मुद्रालङ्कारद्वारोपनिबद्धानि । अप्रतिमघटकः प्रतिमशब्दश्चैकदेशविकृतन्यायमहिम्ना 'प्रतिमा' शब्दं स्मारयन् नाटकस्य नामधेयं प्रतिमानाटकपदव्यपदेश्यताबीजभूतं दशरथप्रतिमावृत्तं चावेदयति । इयं च द्वादशपदता नान्दीमङ्गलसाधारण्यत्र बोध्या । तदुक्तमभियुक्तैः—'पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत' इति । अत्र पदपदं श्लोकपादं सुबन्ततिङन्तत्वरूपपदत्वभाजं च सङ्गृह्णाति । अत्र यद्यपि 'समाप्य पुनरादानात् समाप्तपुनरात्तते'ति लक्षितं समाप्तपुनरात्तत्वं प्रतिभासते, तथापि पालनस्य रावणारित्वविभीषणात्मत्वादिपदप्रत्याय्याशासनाथत्वेनोत्थिताकाङ्क्षत्वं प्रतिभाय परिहरणीयं तदिति बोध्यम् । अत्रेन्द्रवज्रावृत्तम् , तल्लक्षणं यथा "स्यादिन्द्रवज्रायदितौ जगौ गः"॥

इतस्तावदिति—आगम्यतामिति चेष्टाव्यञ्जयम् ।

इममिति—अचिरप्रवृत्तम् । तावदितीह प्रथममित्यर्थे । गीयताम्-गानमारभ्यतामित्यर्थः ।

'अय्य तह' इति—तथेति तदुक्तिस्वीकृतिः, गायामीत्यर्थः ।

---

( नेपथ्य की ओर देखकर )

आर्ये, इधर तो आना ।

( नटी का प्रवेश )

नटी—आर्य, आई तो ।

सूत्रधार—इसी शरद् ऋतु के संबन्ध में इस समय कुछ गाओ ।

नटी- अच्छी बात, गाती हूं । ( गाती है )

सूत्रधारः—अस्मिन् हि काले,

चरति पुलिनेषु हंसी काशांशुकवासिनी सुसंहृष्टा ।

( नेपथ्ये )

आर्य ! आर्य !

अय्य ! अय्य !

( आकर्ण्य )

सूत्रधारः—भवतु, विज्ञातम् ।

मुदिता नरेन्द्रभवने त्वरिता प्रतिहाररक्षीव ॥ २ ॥

---

अस्मिन्निति—इदं चरतीत्यादिना पद्येन सम्बध्यते ।

चरतीति—अस्मिन् काले शरत्समये काशांशुः काशपुष्पप्रकाशा, कवासिनी जलनिवासिनी च । सुसंहृष्टा अतिमुदिता सती हंसी वरटा पुलिनेषु नदीसैकतस्थलीषु चरति-यथेच्छमितस्ततो भ्रमति । हंसी धवला, शरदि काशविकासादत्यच्छप्रभेत्यर्थः । एतावतो भागस्य श्रवणात् प्रवृत्तोऽभिनय इत्यस्माभिरपि सन्नद्धैर्भाव्यमिति नेपथ्यगतानां पात्राणामितस्ततः सम्भ्रमं सम्भवन्तमुत्प्रेक्ष्याह-नेपथ्ये इति ।

प्रतीहार्याः प्रवेशाय कृतभूमिकाधारणायाः सम्भ्रमकृता द्विरुक्तिः-'आर्य आर्य' इति ।

विज्ञातम्—कस्य पात्रस्य वचनमिदमिति मया विदितमित्यर्थः । तस्यैव विदितोक्तेः पात्रविशेषस्य प्रवेशमनुजानान इव सूत्रधारः प्रतिहारीपदगर्भमार्योत्तरार्द्धं पूर्वार्द्धोपात्तहंस्युपादानमुखेनाह—

मुदितेति—हंसी अस्मिन् काले चरतीति पूर्वत्र पादेऽभिहितमिदानीं केव कस्मिन्निति वक्तव्यन्तदाह-नरेन्द्रभवने दशरथाख्यनरपत्यन्तःपुरे प्रतीहाररक्षी प्रतीहारी द्वाराधिकृतेव । सा कथम्भूतेत्यपेक्षायामाह-मुदिता प्रसन्नान्तरङ्गा, त्वरिता कार्या-

---

सूत्रधार—इस शरत् समय में—

काश के फूलों सा धवल प्रकाशवाली, ( अथवा अति स्वच्छ काशकुसुमों से आच्छादित नदी तीर में रहनेवाली ) हंसी प्रसन्न चित्त होकर नदीतट पर इस तरह पदसञ्चार कर रही है.........

( नेपथ्य में )

आर्य, आर्य,

सूत्रधार—अच्छा समझ गया ।

जिस तरह ( काशपुष्प सदृश श्वेत मृदुल वस्त्र पहने ) प्रसन्नहृदया द्वारपालिका शीघ्रता पूर्वक महाराज दशरथ के अन्तःपुर में ( परिभ्रमण करती है ) ॥२॥

( निष्क्रान्तौ । )

स्थापना ।

( प्रविश्य )

प्रतिहारी—आर्य ! क इह काञ्चुकीयानां सन्निहितः ।

अय्य ! को इह कञ्चुईआणां सण्णिहिदो ।

---

धिकृतत्वेन सञ्जातत्वरा, । किञ्चात्रोपमानभूतप्रतीहार्यामपि काशांशुकवासिनीति विशेषणं काशवदंशुकं वस्ते इति विगृह्य योजनीयम् । काशकुसुमवसनयोश्च सूक्ष्मत्व-धवलत्वादिकृतं सादृश्यम् । अन्यत् स्पष्टम् ।

निष्क्रान्ताविति—कथावस्त्वंशस्य स्थापनात् स्थापना*, प्रस्तावनेति पर्यायेणापीय-मभिधीयते ।

अय्येति —प्रतीहारी कञ्चुकिनं कञ्चिदाह्वयति, कञ्चुकिनां मध्ये कोऽत्र सन्निहितः ? सन्निहितः—समीपस्थितः । यस्तथा तेनागन्तव्यमिति तदाशयः ।

---

( दोनों का प्रस्थान )

[ प्रतीहारी का प्रवेश ]

प्रतीहारी—आर्य, कौन कञ्चुकी यहाँ उपस्थित है ?

---

* अत्र गणपतिशास्त्रिणः—

"प्रसाद्यरङ्गं विधिवत्कवेर्नाम च कीर्तयेत् ।
प्रस्तावनां ततः कुर्यात् काव्यप्रख्यापनाश्रयाम्" ॥ ( नाट्यशा० ६ )
"वाञ्छाकल्पस्तु कवेरभीष्टार्थप्रकाशनम् ।
स्वाभिधेयगतत्वेन सा द्विधा परिपठ्यते ॥
स्वगतं तु स्वगोत्रादिस्वीयकीर्तिप्रशंसनम् ।
अभिधेयगतं यत् तत् काव्यनाम्ना प्रकाशनम्" ॥ ( भावप्र० )

इत्यादिलक्षणशास्त्रविहिता कविकाव्यकीर्त्तना कालिदासादिनिखिलकविप्रा-आचरिताऽत्र स्थापनाप्रकरणे कर्त्तव्या सती कस्माच्च कृता ? उच्यते,—प्रस्तावनायां कविकाव्यकीर्त्तनसमुदाचारस्तावदस्य पुराणमहाकवेः काले नावर्त्तत, पश्चात् कालेन कवीनामुपजातं कविकाव्यकीर्त्तनसमुदाचारप्रणयं भूयिष्ठमुपलभ्य तदनुसारिलक्षणं लक्षणकारैः प्रणीतमित्यदोषः । अस्य तु नाटकस्य मातृकाग्रन्थान्तदृष्टपाठानुसाराव् प्रतिमानाटकमिति संज्ञा । श्रीरामे वनाय प्रस्थिते दशरथस्य या दशा सा प्रतिमागृहे तत्प्रतिमां दृष्टवता भरतेनावगतेति प्रतिमाप्रधानत्वादस्य तथा व्यपदेशः । एतत्कवेश्च 'भास' इति नामधेयमनुमितम् । यथा च तदनुमितिसिद्धिस्तत् स्वप्नवासवदत्तो-पोद्घाते निरूपितं तत एवावगन्तव्यम् । इति ।

( प्रविश्य )

काञ्चुकीयः—भवति ! अयमस्मि । किं क्रियताम् ?

प्रतिहारी—आर्य ! महाराजो देवासुरसङ्ग्रामेष्वप्रतिहतमहारथो
अय्य ! महाराओ देवासुरसङ्गामेसु अप्पडिहदमहारहो
दशरथ आज्ञापयति—शीघ्रं भर्तृदारकस्य रामस्य राज्यप्रभाव-
दसरहो आणवेदि—सिग्घं भट्टिदारअस्स रामस्स रज्जपहाव-
संयोगकारका अभिषेकसम्भारा आनीयन्तामिति ।
सञ्जोअकारआ अहिसेअसम्भारा आणीअन्तु त्ति ।

काञ्चुकीयः—भवति ! यदाज्ञप्तं महाराजेन, तत् सर्वं सङ्कल्पितम् । पश्य—

---

किङ्क्रियताम् इति—अवसरप्राप्तं कार्यमादिश्यतामिति तत्तात्पर्यम् ।

अय्य महाराओ इति—आर्य, इति कञ्चुकिसम्बोधने, महाराजः–दशरथ इति विशेष्यमनतिदूरे देवासुरसंग्रामेषु देवदानवयुद्धेषु अप्रतिहतमनोरथः–अवाधप्रसरः महारथो रथमुख्यो यस्य स तथाभूतो दशरथः आज्ञापयति आदिशति । किमिति-जिज्ञासायामाह—शीघ्रमिति । शीघ्रम्–अविलम्बम्, भर्तृदारकस्य–राजकुमारस्य रामस्य राज्यप्रभावसंयोगकारकाः–राज्ञः कर्म राज्यं, प्रभावः–कोशदण्डजं तेजः, ताभ्यां संयोगः सम्बन्धस्तस्य कारकाः सम्पादयितारः अभिषेकसम्भाराः–अभिषेकोपकरणानि आनीयन्ताम्–सज्जीक्रियन्ताम् । अस्मिन् आदेशे राज्यप्रभावसंयोग-कारका इत्यंशस्यायमाशयः, इदानीं रामो यौवराज्येऽभिषेक्तव्यः, तस्मिंस्तत्पदमाश्रितवति तस्य राज्यकर्माधिकृतत्वेन स्वतएव राजकार्यभारः समापन्नो भवति, तेन यौवराज्याभिषेक एव राज्यप्रभावसंयोगकारक इति ।

सङ्कल्पितम् इति—सज्जीकृतमित्यर्थः । सज्जीकृतानि यौवराज्याभिषेकोपकरणानि गणयितुं तानि नाम ग्राहमाह—

---

( कञ्चुकी का प्रवेश )

कञ्चुकी—आर्ये मैं हूं, आज्ञा दें, क्या कार्य है ?

प्रतीहारी—आर्य, देवासुरयुद्ध में समर विजयी महाराज दशरथ का आदेश है कि शीघ्रातिशीघ्र राजकुमार के राजोचित प्रभुत्व के परिचायक राज्याभिषेक की सारी सामग्रियाँ प्रस्तुत की जाय ।

कञ्चुकी—आर्ये,–महाराज की आज्ञा के अनुकूल सब कुछ तैयार रहे । देखिये—

छत्रं सव्यजनं सनन्दिपटहं भद्रासनं कल्पितं
न्यस्ता हेममयाः सदर्भकुसमास्तीर्थाम्बुपूर्णा घटाः ।
युक्तः पुष्यरथश्च मन्त्रिसहिताः पौराः समभ्यागताः
सर्वस्यास्य हि मङ्गलं स भगवान् वेद्यां वसिष्ठः स्थितः ॥३॥

प्रतिहारी—यद्येवं, शोभनं कृतम् ।
जइ एव्वं, सोहणं किदं ।

---

छत्रमिति—छत्रं राजधारणीयं श्वेतातपत्रं सव्यजनं वीजनसाधनान्वितं चामरसहितमित्यर्थः । कल्पितमिति शेषः । सनन्दिपटहं—नन्दिरानन्दः तस्य तत्कालोपयुक्तः पटहो-वाद्यविशेषस्तेन सहितं भद्रासनं मङ्गलमयमासनम्, अत्रापि कल्पितमित्यन्वितम् । सदर्भकुसुमाः-दर्भैः कुशैः कुसुमैः पुष्पैश्च सहिताः ( तथा ) तीर्थस्य गङ्गादितीर्थविशेषस्य तोयं जलं तेन पूर्णाः भृतान्तराः हेममयाः सौवर्णाः घटाः कलशाश्च न्यस्ताः समुपस्थापिताः । राजपुत्राणां यौवराज्याभिषेकावसरे तत्तत्तीर्थोपहृतानाञ्जलानामुपयोग इति तत्सम्प्रदायसिद्धम् । पुष्यरथः-क्रीडाविहारप्रयोजनो रथविशेषश्च युक्तः योजिताश्च कृतः । मन्त्रिभिस्तत्तत्कार्याधिकृतैः प्रधानराज्यकर्मचारिभिः सहिताः पौराः पुरवासिनः समभ्यागताः । अभिषेकदर्शनेन निजाक्षीणि सफलयितुमुपस्थिता इति भावः । नैतावद्भिरुपकरणैरेव सर्वं सम्पाद्यमन्तरातत्त्वावधानदक्षपुरोहितोपस्थितिमित्याशयमन्तर्निधायाह—सर्वस्येति । अस्य पुरोदीरितस्य सर्वस्य वस्तुसमुदायस्य मङ्गलोपकरणत्वेन प्रसिद्धावपि वसिष्ठसन्निधानेनैव तेषां तत्त्वम् इति भावः । अस्य छत्रादेः सर्वस्य मङ्गलोपकरणस्य मङ्गलं कुशलकारणम् भावप्रधाननिर्देशेन कुशलत्वहेतुरित्यर्थः । वसिष्ठः-तदाख्यया प्रसिद्धः ऋषिः वेद्याम् अनुष्ठानस्थाने स्थितः कर्मोपदेष्टृत्वेन वर्त्तमान इति भावः । अत्र काञ्चुकीयोक्तौ साधनसम्पत्तिसमुपस्थितिसूचनेन कार्यावसरः समर्थ्यते । शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं यथा—'सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्' इति ॥ ३ ॥

जइ इति—यथा भवदुक्तिकार्ये कृते पूरिता आवश्यकतेत्यर्थः ॥

---

यह छत्र और चाँवर हैं, यह माङ्गलिक बाजे और सिंहासन हैं, यहाँ कुश, पुष्प और मङ्गलप्रद तीर्थजलों से पूर्ण कलश रखे गये हैं, क्रीड़ारथ जुता खड़ा है, राजमन्त्रियों के साथ सकल पुरजन आ गये हैं, इन समूची आनन्दमय सृष्टि के प्रवर्त्तक वह भगवान् वसिष्ठ भी वेदी पर विराजमान हैं ॥ ३ ॥

प्रतीहारी—यदि ऐसी बात है तो अति उत्तम ।

काञ्चुकीयः—हन्त भोः !

इदानीं भूमिपालेन कृतकृत्याः कृताः प्रजाः।
रामाभिधानं मेदिन्यां शशाङ्कमभिषिञ्चता ॥ ४ ॥

प्रतिहारी—त्वरतां त्वरतामिदानीमार्यः।
तुवरदु तुवरदु दाणिं अय्यो।

काञ्चुकीयः—भवति ! इदं त्वर्यते। ( निष्क्रान्तः )

प्रतिहारी—( परिक्रम्यावलोक्य ) आर्य ! सम्भवक ! सम्भवक ! गच्छ,
अय्य ! संभवअ ! संभवअ ! गच्छ,
त्वमपि महाराजवचनेनार्यपुरोहितं यथोपचारेण त्वरय।
तुवं पि महाराअवुअणेण अय्यपुरोहिदं जहोपआरेण तुवारेहि।
( अन्यतो गत्वा ) सारसिके ! सारसिके ! सङ्गीतशालां गत्वा
सारसिए ! सारसिए ! सङ्गीदसालं गच्छिअ,

---

हन्त भोः इति—निपातसमुदयोऽयमानन्दव्यञ्जक इति।

इदानीमिति—इदानीमधुना रामाभिधानं रामनामकं शशाङ्कं-शीतलशीलता-प्रियदर्शनत्वादिना चन्द्रमसं मेदिन्यां पृथिव्यां धराभारधारणे यौवराज्येऽभिषिञ्चता स्थापयता भूमिपालेन राज्ञा दशरथेन प्रजाः अस्मदादयः प्रकृतयः कृतकृत्याः कृतार्थाः कृता विहिताः। रामयौवराज्याभिषेको हि जनतामनोरथसिद्धिरस्त्यर्थः। अत्राभिषिञ्चतेत्यत्र वर्त्तमानसामीप्ये लट्। तेन चानुपदमेव भवन्नभिषेकः समर्थितः ॥४॥

'तुवरदु' इति—अतः परं करणीयानामनुष्ठाने क्षिप्रताऽऽदिश्यते।

यथोपचारेण—यथोचितसम्मानपूर्वकम्। त्वरय—आगन्तुमनुरुध्यस्व। नाट-

---

कन्चुकी—अहो ! बड़े हर्ष की बात है—

पृथ्वी पर के चन्द्र श्रीराम का राज्याभिषेक करके अब महाराज दशरथ ने सचमुच प्रजाओं को कृतकृत्य कर दिया है ॥ ४ ॥

प्रतीहारी—आर्य, शीघ्रता कीजिये, शीघ्रता।

कन्चुकी—आर्ये, यह शीघ्रता कर रहा हूँ।

प्रतीहारी—( घूमकर और देखकर ) आर्य सम्भवक, सम्भवक, जाओ, तुम भी महाराज के आदेशानुसार मान्य पुरोहित महोदय को यथोचित आदर के साथ शीघ्र ओ। ( दूसरी ओर जाकर ) सारसिके, ओ सारसिके, सङ्गीतशाला में जाकर अभिनय करनेवालों से कहो कि वे आज एक सामयिक अभिनय दिखाने को तैयार

नाटकीयानां विज्ञापय—कालसंवादिना नाटकेन सज्जा भवतेति ।
णाडईआणं विण्णवेहि—कालसंवादिणा णाडएण सज्जा होहत्ति ।
यावदहमपि सर्वं कृतमिति महाराजाय निवेदयामि ।
जाव अहं वि सव्वं किदं त्ति महाराअस्स णिवेदेमि ।

( निष्क्रान्ता । )

( ततः प्रविशत्यवदातिका वल्कलं गृहीत्वा )

अवदातिका—अहो अत्याहितम् । परिहासेनापीमं वल्कलमुपनयन्त्या
अहो अच्चाहिदं । परिहासेण वि इमं वक्कलं उवणअन्तीए
ममैतावद् भयमासीत्, किं पुनर्लोभेन परधनं हरतः । हसितु-
मम एत्तिअं भअं आसी, किं पुण लोभेण परधणं हरन्तस्स । हसिदुं
मिवेच्छामि । न खल्वेकाकिन्या हसितव्यम् ।
विअ इच्छामि । ण खु एआइणीए हसिदव्वं ।

---

कीयानां—नाटकप्रयोगाधिकृतानां कुशीलवानामित्यर्थः । अत्र कर्मणि षष्ठी चिन्त्या । सज्जाः—प्रयोगाय कृतसन्नाहाः । निवेदयामि यावत् निवेदयिष्यामि सूचयिष्यामीत्यर्थः । 'यावत्पुरानिपातयोर्लट्' इति भविष्यति लट् ।

अहो—कष्टम्—अत्याहितम् महद्भयमुपस्थितम् । किन्तदिति विवृणोति–'परिहासेण' इति—अन्यदीयाम्–इतरस्वामिकाम्, अल्पमूल्याम्–अनधिकमूल्याम्, वृक्षत्वचं–तरुवल्कलं, परिहासेन–विनोदपरिहासार्थम् उपनयन्त्याः गृह्णत्याः अपि मम एतावत् स्वानुभवैकगोचरप्रमाणं भयं साध्वसं जातं प्रादुर्भूतं चेत्, लोभेन परधनं–परकीयां सम्पदं हरतश्चोरयतः कीदृग् भयं जायेतेत्यर्थः । एतेन कैकेयीकर्तृक-रामराज्यापहारकथेङ्गितेन सूचिता । हसितव्यमिति–स्निग्धजन संविभक्तं हि सुखमधिकं स्वदत इति द्वितीयान्वेषणौचित्यम् ।

---

रहें । मैं तबतक 'सब कुछ तैयार है' ऐसी सूचना महाराज को दे देती हूं ।

( प्रस्थान )

( वल्कल लिए अवदातिका का प्रवेश )

अवदातिका—ओह ! बड़ा बुरा हुआ । विनोद में भी इन वल्कलों को उठा लाने से जब मैं इतना डर गयी हूँ, तो बुरी नीयत से परकीय धन को हरने वालों की क्या दशा होती होगी ? हंसने की इच्छा सी हो रही है, परन्तु एकाकी हँसना तो भला न लगेगा ।

( ततः प्रविशति सीता सपरिवारा )

सीता—हञ्जे ! अवदातिका परिशङ्कितवर्णेव दृश्यते । किन्नुखल्विवैतत् ।

हञ्जे ! ओदादिआ परिसङ्किदवण्णा विअ दिस्सइ । किण्णुहु विअ एदं ।

चेटी—भट्टिनि ! सुलभापराधः परिजनो नाम । अपराद्धा भविष्यति ।

भट्टिणि ! सुलहावराहो परिअणो णाम । अवरज्झा भविस्सदि ।

सीता—नहि नहि, हसितुमिवेच्छति ।

णहि णहि, हसिदुं विअ इच्छदि ।

अवदातिका—(उपसृत्य) जयतु भट्टिनी । भट्टिनि ! न खल्वहमपराद्धा ।

जेदु भट्टिणी । भट्टिणि ! ण खु अहं अवरज्झा ।

सीता—का त्वां पृच्छति । अवदातिके ! किमेतद् वामहस्तपरिगृहीतम् ।

का तुमं पुच्छदि । ओदादिए ! किं एदं वामहत्थपरिग्गहिदं ।

---

हञ्जे इति—पराकारपरिचयचतुरा हि सीता तन्मुखदर्शनमात्रेण तदाशङ्कामनुमायेत्थमाह–हञ्जे इति । वयोऽवस्थादिना नीचानां चेटीनां सम्बोधनपदम् । तथाचोक्तम्–'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इति । परिशङ्कितवर्णेव–परिशङ्कितायाः मानसिकशङ्काकुलायाः वर्णो लक्षणमाकार इव वर्णो यस्यास्तथाभूतेव ।

अवरज्झा इति—कृतापराधा भविष्यामीति भावः, एवञ्च कृतापराधस्य शङ्काकुलत्वमतिसम्भावितमिति त्वदूहः समूल इति तदाशयः ।

णहि इति—एवमुक्तवत्याश्चेट्या मुखमीक्षित्वा हासलक्षणं च तत्रावेक्ष्य स्वं पूर्वोक्तिकारणं भ्रमं मार्जयत्यनेन कथनेन सीतेति बोध्यम् ।

कातुमं इति—त्वदपराधविषये न मया सन्दिग्धं नवा तथा जिज्ञासितमपि ।

---

[ सपरिवार सीता का प्रवेश ]

सीता—अरी सखि, अवदातिका की मुखाकृति कुछ भयाकुल सी दीख रही है, क्या बात है ?

चेटी—महारानी, अनुचरों से कुछ न कुछ अपराध हो ही जाता है। इस से भी कुछ अपराध हो गया होगा ।

सीता—नहीं, नहीं । वह तो हँसना चाह सी रही है ।

अवदातिका—( पास आकर ) जय हो महारानी जी की । महारानी जी, मुझ से किसी प्रकार का अपराध नहीं हुआ है ।

सीता—तुम से पूछती कौन है ? अवदातिका, अरी, यह तुम्हारे बायें हाथ में क्या है ?

अवदातिका—भट्टिनि ! इदं वल्कलम् ।
भट्टिणि ! इदं वक्कलं ।

सीता—वल्कलं कस्मादानीतम् ।
वक्कलं किस्स आणीदं ।

अवदातिका—शृणोतु भट्टिनी । नेपथ्यपालिन्यार्यरेवा निर्वृत्तरङ्गप्रयोजनमशोकवृक्षस्यैकं किसलयमस्माभिर्याचितासीत् । न च तया दत्तम् । ततोऽर्हत्यपराध इतीदं गृहीतम् ।
सुणादु भट्टिणी । णेवच्छपालिणी अय्यरेवा णिव्वुत्तरङ्गप्पओअणं असोअरुक्खस्स एक्कं किसलअं अह्मेहि जाइदा आसि । ण अ ताए दिण्णं । तदो अरिहदि अवराहो त्ति इदं गहिदं ।

सीता—पापकं कृतम् । गच्छ, निर्यातय ।
पावअं किदं । गच्छ, णिय्यादेहि ।

अवदातिका—भट्टिनि ! परिहासनिमित्तं खलु मयैतदानीतम् ।
भट्टिणि ! परिहासणिमित्तं खु मए एदं आणीदं ।

---

अथापि—त्वमित्थमभिदधासीति त्वयि शङ्कायाः सम्भाव्यते समुदय इति ।

नेपथ्यपालिनी—रङ्गालङ्काररक्षाधिकृताः साहिपात्रैः परुपयुज्य स्थापितानि तैरुपयोक्ष्यमाणानि वा वस्त्राभरणादीनि तत्रावहिता पालयितुं नियुज्यते । निर्वृत्तरङ्गप्रयोजनम्—अभिनयावसरे कृतोपयोगम् । किसलयम्—पल्लवम् । अत्र याचेर्द्विकर्मकतया द्वितीया, द्वितीयं कर्म । 'आर्यरेवा' इति । अत्रैव कर्मत्वस्योक्तेः । अर्हति—औचित्यमावहति ।

निर्यातय—परावर्त्तय । परकीयवस्तु हि तदननुज्ञया गृह्यमाणं ग्रहीतारं दोषभाजं करोति ।

परिहासनिमित्तम्—परिहासार्थम् ।

---

अवदातिका—महारानी जी, यह वल्कल है ।

सीता—तूं वल्कल कहां से उठा लाई ।

अवदातिका—महारानी जी, सुनिये, नेपथ्यरक्षिका आर्या रेवा है, उससे मैंने कहा कि यह अशोकपत्र जो नाटक में उपयुक्त हो चुका है, हमे दे, किन्तु उसने नहीं दिया । इसी लिये उसके स्थान में यह वल्कल ही उठा लाई हूं ।

सीता—यह तो बुरा किया । जा, लौटा दे ।

अवदातिका—महारानी जी, मैं तो इसे हंसी में ले आई हूं ।

सीता—उन्मत्तिके ! एवं दोषो वर्धते । गच्छ, निर्यातय निर्यातय ।

उन्मत्तिए ! एव्वं दोसो वड्ढइ । गच्छ, णिय्यादेहि णिय्यादेहि ।

अवदातिका—यद् भट्टिन्याज्ञापयति । ( प्रस्थातुमिच्छति )

जं भट्टिणी आणवेदि ।

सीता—हला एहि तावत् ।

हला एहि दाव ।

अवदातिका—भट्टिनि ! इयमस्मि ।

भट्टिणि ! इअह्मि ।

सीता—हला ! किन्नुखलु ममापि तावच्छोभते ।

हला ! किंणुहु मम वि दाव सोहदि ।

अवदातिका—भट्टिनि ! सर्वशोभनीयं सुरूपं नाम । अलङ्करोतु भट्टिनी ।

भट्टिणि ! सव्वसोहणीअं सुरूवं णाम । अलङ्करोदु भट्टिणी ।

---

उन्मत्तिके—उन्मादिनि, भ्रान्तचित्ते, परिहासार्थमन्यदीयवस्त्वादानं न साधु तच्च साधुमत्त्वाऽनुतिष्ठन्ती भ्रान्तमतित्वमात्मनः सूचयतीति तथा सम्बोधिता । परिहासचौर्यमपि लोभमुपचपयन् परमार्थचौर्ये प्रवर्तकत्वमुपयातीति भावः, निर्यातय—परावर्त्तय, अत्र द्विरुक्तिः सम्भ्रमसूचनार्था, सम्भ्रमश्च तस्य कार्यस्य त्वरयाऽनुष्ठानं व्यञ्जयितुम् ।

मम वि इति—मया धार्यमाणमिदं वल्कलं श्रियमादधाति नवेति तत्प्रश्नाशयः ।

सव्व इति—सुरूपं सुभगं स्वभावरमणीयं वपुः शरीरं, सर्वशोभनीयम्—सर्वैः सुन्दरताऽऽधानसमर्थैः अतथाविधैर्वा पदार्थैः शोभनीयं शोभयितुमलङ्कर्त्तुं समर्थम् । सुन्दरी आकृतिः केनापि पदार्थेन भूषयितुं सुशकेति तात्पर्यम् । अनुमोदितश्चायमर्थः कालिदासेनापि—'किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इति ।

---

सीता—पगली, इसी प्रकार बुराई बढ़ती है । जा, लौटा दे, लौटा दे ।

अवदातिका—जो आज्ञा । ( जाना चाहती है )

सीता—अरी, जरा इधर तो आ ।

अवदातिका—महारानी, आई ।

सीता—अरी, क्या यह वल्कल मुझे भी भला लगेगा ?

अवदातिका—महारानी जी, सुन्दर रूप पर सभी चीजें अच्छी लगती हैं । आप पहन कर देखें ।

सीता—आनय तावत् । ( गृहीत्वालङ्कृत्य ) हला ! पश्य, किमिदानीं
आणेहि दाव । हला ! पेक्ख, किं दाणिं
शोभते ?
सोहदि ?
अवदातिका—तव खलु शोभते नाम । सौवर्णिकमिव वल्कलं संवृत्तम् ।
तव खु सोहदि णाम । सौवण्णिअं विअ वक्कलं संवुत्तं ।
सीता—हञ्जे ! त्वं किञ्चिन्न भणसि ।
हञ्जे ! तुवं किञ्चि ण भणासि ।
चेटी—नास्ति वाचा प्रयोजनम् । इमानि प्रहर्षितानि तनूरुहाणि
णत्थि वाआए पओअणं । इमे पहरिसिदा तणुरुहा

---

आणेहि दावेत्यादि—इदानीं वल्कलधारणानन्तरम्, शोभते-भासते मम वपु-रित्यर्थः । धृतेनानेन वल्कलेन मदीयशरीरकान्तिरधिकीकृता नवेति तदाशयः । अथवा धारितेनानेन वल्कलेन मदीयशरीरमलङ्क्रियते स्वशोभा वा मत्कायसम्पर्कवशादतिशाय्यते इति प्रश्नाशयः । अत्राथें सीताया रूपगर्वितात्वं प्रतीयते, तद्वर्णनञ्च तादृश्यां नायिकायां नोपयुज्यत इति प्रथमार्थ एवादरः । तस्मिंश्चाश्रीयमाणे 'किन्तु खलु ममापि तावच्छोभते' इति पूर्वोक्तेन समं पुनरुक्तिरित्युभयतःपाशारज्जुरियम् ।

सौवर्णिकम् इति—सुवर्णनिर्मितमिव । त्वत्कायसम्पर्कमहिम्ना तरुवल्कलमिदं सुवर्णनिर्मितमिवावभासत इत्यर्थः ।

'ण भणासि' इति—त्वं किञ्चिन्न भणसि, अत्र प्रसङ्गे तवाभिप्रायो नाभिव्यज्यते, तत्र हेतुं न विद्म इति सीताऽभिप्रायः ।

'णत्थि' इति—वाचा प्रयोजनम्—वचनस्यावश्यकता 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्' इत्यनुशासनात् निमित्तार्थकप्रयोजनशब्दयोगे वाचेत्यत्र तृतीया । नन्वेवं वाचोऽप्रयोजनत्वेऽनुमापकप्रमाणाभाव इत्यपेक्षायामाह—इमानीति ।

---

सीता—अच्छा ला । ( लेकर तथा पहन कर ) अरी, देख तो क्या अब अच्छा लगता है ?

अवदातिका—आप को तो अच्छा लगता है । यह वल्कल तो अब सुवर्णनिर्मित-सा प्रतीत होता है ।

सीता—सखि, तुम कुछ नहीं बोलती ।

चेटी—वाणी का प्रयोजन नहीं । यह हमारे रोंगटे सब कहे दे रहे हैं ।

मन्त्रयन्ते । ( पुलकं दर्शयति )
मन्तेन्ति ।

सीता—हञ्जे ! आदर्शं तावदानय ।
हञ्जे ! आदंसअं दाव आणेहि ।

चेटी—यद् भट्टिन्याज्ञापयति । (निष्क्रम्य प्रविश्य) भट्टिनि ! अयमादर्शः ।
जं भट्टिणी आणवेदि । भट्टिणि ! अअं आदंसओ ।

सीता—(चेटीमुखं विलोक्य) तिष्ठतु तावदादर्शः । त्वं किमपि वक्तुकामेव ।
चिट्ठदु दाव आदंसओ । तुवं किं वि वत्तुकामा विअ ।

चेटी—भट्टिनि । एवं मया श्रुतम् । आर्यबालाकिः कञ्चुकी भणति-
भट्टिणि ! एवं मए सुदं । अय्यवालाई कञ्चुई भणादि-
अभिषेकोऽभिषेक इति ।
अहिसेओ अहिसेओ त्ति ।

सीता—कोऽपि भर्ता राज्ये भविष्यति ।
को वि भट्टा रज्जे भविस्सदि ।

---

तनूरुहाणि-लोमानि प्रहर्षितानि-उद्गतानि । पुलकितानां रोम्णामेव मदन्तर्गतामन्दानन्दाभिव्यञ्जकत्वशालित्वे तदभिप्राया वागावश्यकतारहितेति भावः । रोमोद्गमोत्थानन्दप्रभवः, आनन्दश्चात्र वल्कलाहितवत्कायशोभातिशयदर्शनजन्मैवेति मम वचनं भूतार्थव्याहृतिमात्रतामुपगच्छेदिति कृत्वैवाहमवचनास्थितास्मीति सख्याशयः ॥

'चिट्ठदु' इति—आनीतस्य दर्पणस्योपयोगस्तावन्माऽकारि, किमपि त्वं विवक्षसि, तदाकर्ण्यैव परतः किमपि तदाधारेण निर्धारणीयमिति सीताया आशयः ।

कोवि इति—दशरथस्य जीवनदशायामत्र राज्ये कस्यापि परिवर्तनस्यानावश्यकत्वेनाशङ्कनीयतया कुत्रापि राज्ये कोऽपि कुमारः अभिषेक्ष्यते तदस्माकमत्र ना-

---

( रोमाञ्च दिखाती है )

सीता—सखि, जरा शीशा तो ला ।

चेटी—जो आज्ञा । ( जाकर तथा आकर ) महारानी जी, लीजिये यह दर्पण ।

सीता—( सखी के मुँह पर दृष्टि दे कर ) दर्पण रहने दे । अच्छा, पहले यह तो बता—क्या तूं कुछ कहना चाहती है ?

चेटी—महारानी, हमने ऐसा सुना है । आर्य बालाकि कञ्चुकी कह रहे थे—राजतिलक है, राजतिलक है ।

सीता—हां, होगा किसी का राजतिलक ।

